मामाराधयतं सुधेयमरतिर्भावी सुतस्तेन वां
गत्वेति स्वयमादिदेश गिरिशः स्वप्ने समीपं मयोः ॥
सुप्रीतयोर्भगवतो मम नामधेय-
माधेयमस्य पुनरित्यनुशासनेन ।
स्वाराधितस्मरहरस्वरमानुरूपो
रूपानुमेयसुनयस्तनयोऽजनिष्ट ॥
**गङ्गाधराख्यः** स ततो जितात्मा यः शैशवाद्विश्वजनीनवृत्तः ।
विवर्धमान. परलोकभीत्या सदात्मनीनं नयमाततान ॥
अभवदनुजो **महीधर** इति पुत्रौ श्रीमनोरथादुदितौ ।
[1]**आशीर्वराभिनन्दौ हरिहरपुरुषोत्तमौ** दशरथात्तु ॥
सत्कल्पप्रवणाः श्रुतिप्रणयिनः शिक्षाभिरुद्भासिताः
सज्ज्योतिर्गतयो निरुक्तविशदाश्छन्दोविधौ साधवः ।
ख्याता व्याकरणक्रमेण विदुषामत्युच्चधीशीलना-
द्वेदाङ्गप्रतिमाः षडेव भुवने ते बिभ्रति भ्रातरः ॥
तदन्तरे **मान**नरेन्द्रचन्द्रमाः स **रुद्रमानो**ऽजनि येन भूभुजा ।
स्वमेदिनीमण्डलमादिकोलवद्बलादमित्राम्बुनिधेः समुद्धृतम् ॥
पाणि[र्दानचणः प्रभौघ]लह[री] वक्त्रं च यस्य स्वयं
मर्यादास्थितिमान्स एव जगता जीवातवश्चेत्कृताः ।
तत्किं कल्पलताद्यहीन्द्रकमठौ सा चित्रभानुद्वयी
पद्मेन्द्र(न्दू) निधयोऽम्भसामिति विधेर्धिक्प्रक्रियागौरवम् ॥
सूक्ष्मं दिक्करिदन्तकोटिमटितुं क्रान्तौ गिरीणां लघु
व्याप्तुं व्योम पृथु स्थिताविह दिशि प्रोत्तं वशिभ्रान्तिषु ।

---

१ इद विशेषणवाचक प्रतीयते, तथापि वक्ष्यमाणश्लोके 'षडेव भ्रातर.' इत्युक्तिसंवादेनोभयोर्नामत्वेन व्याख्येयम् Dr F. Kielhorn, Ph. D, C I. E, महाशयास्तु "All these six men, Manoratha and Das'aratha and their four sons" इति वदन्ति.

क्षीराब्धीन्दुसुधादिषु प्रभवति ब्रह्माण्डगर्भाद्बहि-
र्नियात्यस्ति यथेत्थ(च्छ)मीश्वरगुणैरित्यद्भुतं यद्यशः ॥

युद्धे बद्धोत्सवरिपुभटश्रेणि·········: सदा यो
बन्धुः शुद्धो विपदि विसरत्कार्यनिर्याससीमा ।
श्रेयान्सभ्यः सदसि विशदे विश्वविश्वासपात्रं
पातुं मित्रं हृदयमितरत्तस्य **गङ्गाधरो**ऽभूत् ॥

आचाराभरणः सुभाषितचणः सन्नीतिरत्नापणः
प्रागल्भीरमणः प्रशान्तकरणः कारुण्यपारायणः ।
यः सौजन्यनिधिः स्थितावनुपधिः सख्यस्य मुख्यो विधि-
र्धीरत्वेऽनवधिर्विधूतवितथव्याधिर्धियां शेवधिः ॥

**गौडराज**सुहृदो **जयपाणे**राधिकारिकपदोपपदस्य ।
आत्मजामुदवहत्सुभगायाः पेशलां स किल **पासलदेवीम्** ॥

आक्रान्तो न वृषः कदापि गतये यस्मिन्नहीनाङ्गना
रौद्री नाद्रियते स्थितिर्न गणितास्ता गोत्रभित्संकथाः ।
अन्योन्यास्यविलासवञ्चितदृशोरेकं वपुर्बिभ्रतो-
स्तत्प्रायः शिवयोरपीदमनयोर्दाम्पत्यमत्यादृतम् ॥

संतोषार्जवधैर्यसंयमदमानुक्रोशशान्तिक्षमा-
मैत्रीसत्यसमाधिमग्नमनसो नारायणैकात्मनः ।
दम्भद्रोहविमोहलोभममतामात्सर्यमायामद-
द्वेषेर्ष्यादिनिसूदनस्य चरिते यस्यात्र साक्षी जनः ॥

तेनात्र दुःशकमसीम सहस्रकृत्वः
कृत्यं स्वभर्तुरुचितोन्नतये समाप्य ।
आबाल्ययौवनमसुप्रतिरोधि बन्धु-
लोकस्य चेतसि चमत्कृतिराचितैव ॥

यस्याद्वैतशते स्वयं विरचिते किंचित्कवित्वश्रम.
स ब्रह्मोपनिषत्कथास्वधिगमः शुद्धो विरुद्धोऽथवा ।

भाव्यः सूरिभिरेव चित्रकवितायासस्तुतो दुष्करे
भारत्याः कुरुतेऽपरान्निजगुणप्रस्तावनां केन सः ॥
धा·····वर्तवशाद्विसृत्वरतरुप्रासादसद्मादिक-
व्यक्ताकारकदम्बमम्बरमनु स्वेनोद्भवत्यभ्रियम् ।
स्थित्वा तत्क्षणतो विपन्नमपुनर्भावाद्यथेदं तथा
मत्वैव त्रिजगन्ति येन जनितः सत्कर्मधर्मादर. ॥
पुण्योत्पत्तिनिमित्तमत्र निजयोः पित्रोः पवित्रात्मना
कीर्त्या तेन तयोश्चिरं रचयता शुभ्रातपत्रं जगत् ।
कासारोऽयमकारि पारदरसच्छायाभृतामम्भसां
यस्मिन्नूर्मिमिषाद्यशस्तदमलं मूर्तं नरीनृत्यते ॥
स्वकीर्त्या सरसस्तस्य प्रतिष्ठासमयोत्सवे ।
शुभ्राम्बरपरीधानं जगत्तेनात्र कारितम् ॥
आकाशः पवनः कृशानुरुदकं धात्रीति लोकत्रयो
मूर्त्या ब्रह्म विवर्तमानमयते यावद्विचित्रां गतिम् ।
नेत्रश्रोत्रमनःप्रसादसदने तावत्सतामादरा-
दुन्निद्रां मुदमान्तरेषु कुरुतां कीर्तिप्रशस्ती इमे ॥
क्व शक्तिव्युत्पत्तिव्यतिकरविरोधेन सुलभाः
कवीनां पन्थानस्तदिह ननु केषामनुगमः ।
स्वपूर्ते त्वेतस्मिन्सुजनजनितोऽनुग्रहगुणः
प्रशस्तौ प्राशस्त्यं वितरति स गङ्गाधरगिराम् ॥
नन्देषुव्योमेन्दु(१०५९)समे शकाब्दे रुद्रात्मजश्चोद्धरणस्य नप्ता ।
इमां शिलाशिल्पिवरः प्रशस्तिं स शूलपाणिः स्वयमुच्चखान ॥

शाक १०५९ ॥

(एपिग्राफिआ इण्डिका-